॥ महादेवस्तुतिः ॥

जय शङ्कर शान्त शशाङ्करुचे
रुचिरार्थद सर्वद सर्वशुचे ।
शुचिदत्तगृहीतमहोपहृते
हृतभक्तजनोद्धततापतते ॥ १॥

ततसर्वहृदम्बर वरद नते
नतवृजिनमहावनदाहकृते ।
कृतविविधचरित्रतनो सुतनो
तनुविशिखविशोषणधैर्यनिधे ॥ २॥

निधनादिविवर्जित कृतनतिकृत्
कृतिविहितमनोरथपन्नगभृत् ।
नगभर्तृसुतार्पितवामवपुः
स्ववपुः परिपूरितसर्वजगत् । ३
त्रिजगन्मयरूप विरूप सुदृग्
दृगुदञ्चनकुञ्चनकृतहुतभुक् ।
भव भूतपते प्रमथैकपते
पतितेष्वपि दत्तकरप्रसृते ॥ ४॥

प्रसृताखिलभूतलसंवरण
प्रणवध्वनिसौधसुधांशुधर ।
धरराजकुमारिकया परया
परितः परितुष्ट नतोऽस्मि शिव ॥ ५॥

शिव देव गिरीश महेश विभो
विभवप्रद गिरिश शिवेश मृड ।
मृडयोडुपतिध्र जगत्त्रितयं
कृतयन्त्रणभक्तिविघातकृताम् ॥ ६॥

न कृतान्तत एष विभेमि हर
प्रहराशु महाघममोघमते ।
न मतान्तरमन्यदवैमि शिवं
शिवपादनतेः प्रणतोऽस्मि ततः ॥ ७॥

विततेऽत्र जगत्यखिलेऽघहरं
हरतोषणमेव परं गुणवत् ।

गुणहीनमहीनमहावलयं
प्रलयान्तकमीश नतोऽस्मि ततः ॥ ८॥

इति स्तुत्वा महादेवं विररामाङ्गिरः सुतः ।
व्यतरच्च महेशानः स्तुत्या तुष्टो वरान्बहून् ॥ ९॥

बृहता तपसानेन बृहतां पतिरेध्यहो ।
नाम्ना बृहस्पतिरिति ग्रहेष्वर्च्यो भव द्विज ॥ १०॥

अस्य स्तोत्रस्य पठनादपि वागुदियाच्च यम् ।
तस्य स्यात्संस्कृता वाणी त्रिभिर्वर्षैस्त्रिकालतः ॥ ११॥

अस्य स्तोत्रस्य पठनान्नियतं मम सन्निधौ ।
न दुर्वृत्तौ प्रवृत्तिः स्यादविवेकवतां नृणाम् ॥ १२॥

अदः स्तोत्रं पठञ्जन्तुर्जातु पीडां ग्रहोद्भवाम् ।
न प्राप्स्यति ततो जप्यमिदं स्तोत्रं ममाग्रतः ॥ १३॥

नित्यं प्रातः समुत्थाय यः पठिष्यति मानवः ।
इमां स्तुतिं हरिष्येऽहं तस्य बाधाः सुदारुणाः ॥ १४॥

त्वत्प्रतिष्ठितलिङ्गस्य पूजां कृत्वा प्रयत्नतः ।
इमां स्तुतिमधीयानो मनोवाञ्छामवाप्स्यति ॥ १५॥

इति श्रीमहादेवस्तुतिः समाप्ता ।